येव भासते । यदि च वृक्षं प्रति सिञ्चतीत्यादावुपसर्गस्य प्रतेर्वाच्यो द्योत्यो वा कश्चिदन्यो ऽर्थस्तदास्तु स एवात्रापि तदर्थः ।

अत एव तस्येवास्यापि प्रतिशब्दस्य प्रयोगो नानर्थकः ।

वस्तुतो ऽनर्थकयोः कर्मप्रवचनीयाधिपरिशब्दयोः प्रयोगवत्तादृशप्रतेरपि प्रयोगस्य प्रयोजनान्तरानुपपत्तिश्चिन्त्या। प्रतेर्यत्र व्यापकतार्थकत्वं तत्र प्रतिवृक्षं सिञ्चतीत्यव्ययीभावसमास एव नियतः। तदर्थकाव्ययस्याव्ययीभावसमासविधेर्विभाषाधिकारीयताविरहेण नित्यत्वादतो वीप्सया प्रतिवृक्षं सिञ्चतीतिवद् वृक्षं प्रतिसिञ्चतीति न प्रयोगः । यत्र व्यापकत्वार्थकेनाव्ययेनाव्ययीभावसमासस्तदुत्तरं सर्वत्र प्रथमा विभक्तिरेव, नतूपकुम्भे गच्छतीतिवत् प्रतिगृहे ऽश्वा इत्यादिरपि प्रयोगः । उक्तयुक्त्या तत्र प्रतिना ऽश्वादौ गृहादिव्यापकताया बोधयितुमशक्यत्वात् ।

तदाधारतादिरूपसप्तम्याद्यर्थो च समासार्थस्य गृहादिव्यापकत्वस्याश्रयतासम्बन्धेन तदर्थस्य व्यापकरूपधर्मिणो वा ऽभेदसम्बन्धेनान्वये मेयत्वे घटः घटवृत्तौ घट इत्यादिप्रयोगवारणाय कल्प्यायाः सप्तम्यर्थाधारताया आश्रयत्वसंबन्धेनाभेदसंम्बन्धेन वा प्रकृत्यर्थानन्वयव्युत्पत्तेर्विरोधात् । उपकुम्भे निधेहि, उपकुम्भादागतः, उपकुम्भेन कृत इत्यादौ च विवक्षितस्याधारत्वापादानत्वकर्तृत्वादौ कुम्भसमीपादेराधेयतासंबन्धेनान्वयस्याधेयत्वादौ निरूपितत्वसम्बन्धेन तदन्वयस्य वा बोधे न कश्चिद् व्युत्पत्तिविरोध इत्युपपद्यन्ते तथा प्रयोगा इति ध्येयम् ।

त्वां च मां चान्तरेत्यादावन्तरान्तरेण युक्त इति द्वितीयाया निरूपितत्वमर्थः । तस्यान्तरापदार्थतावच्छेदकमध्यत्वे ऽन्वयः । एवमन्यत्रापि तदर्थस्तूक्तदिशा स्वयं परिच्छेद्यः

इति द्वितीयाविभक्तयः

---

अस्याऽपीति—वृक्षं वृक्षं प्रति सिञ्चतीतिवाक्यघटकस्याऽपीत्यस्येति । आश्रयतासम्बन्धेनेति—अन्वये इत्यनेन सह सम्बन्धः । अभेदसम्बन्धेनेति—एवञ्च गृहव्यापकं यदाधारत्वं तदाश्रयीभूतोऽश्व इतिशाब्दः । मध्यत्वेऽन्वय इति—एवञ्च त्वन्निरूपितं मन्निरूपितञ्च मध्यत्वम्प्रत्येतव्यम् ।

इति श्रीत्रिकोणयन्त्रसन्निभकाशीप्रयागायोध्याख्यतीर्थत्रयमध्यभूमि-
जौनपुर बदलापुर उदयपुरगेरुहवाभिजन्मगर्गवंशीयसरयूपारीण-
शुक्लश्रीवेणीमाधवशास्त्रिकृतशास्त्रार्थ-
कलासहिते व्युत्पत्तिवादे द्वितीया-
कारकं समाप्तम् ।

## ग्रन्थकृदन्वयपरिचयः

सृष्टिसमये ब्रह्मणुत्पत्त्यनन्तरं गर्गगौतमशाण्डिल्यादयोऽग्निकल्पा महर्षयस्सम्बभूवुः। महीयांसश्च ते अग्निहोत्रादिवैदिककर्मानुष्ठानाय परमपवित्रं सरयूतटमागत्य यज्ञभूमिम् प्रकल्प्य स्थितास्तत्रैव वर्णाश्रममर्य्यादाम् पालयामासुः। तत्रास्माकं पूर्वजानां गर्गवंशे जनिः, गोरक्षपुरप्रान्तान्तर्वर्त्तिमझवली ( मझौली ) ति प्रसिद्धे विश्वसेन ( विसेन ) क्षत्रियपालिते तद्गुरुत्वेन तस्थुः पुराणपुरुषाः। कदाचित्तीर्थयात्राङ्कुर्वन्तस्ते महानुभावाः काशीप्रयागायोध्याभिधतीर्थत्रयमध्यभुवं जौनपुरवद्लापुराभिधं मार्गस्थं सक्षत्रियाः प्रापुः। तत्र विशेषतो धर्मविपर्य्ययन्दुष्टजनजन्यं विलोक्य सार्धं विद्यमानं क्षत्रियमाज्ञाप्य कारयित्वा च दुष्टप्रशमं प्रातराराध्याः विजयदत्तशुक्लाः पुत्रचतुष्टयसम्पन्नाः तत्रैव तपस्समाचारमारेभिरे। क्षत्रियकुलललामभूताश्शिष्यास्तेजबहादुरसिंहाभिधाश्च तत एवारभ्य तत्रत्यप्रजास्सम्पालयामासुः। प्रातः स्मरणीयपादानान्तेषाञ्चतुर्णामेके सर्वतन्त्रस्वतन्त्रा विख्यातभूतलप्रतिष्ठाः षड्दर्शनालङ्कृताः स्वनामधन्याः श्रीटीकारामशुक्लशास्त्रिणः समजनिषत। ते च महानुभावाः शास्त्राध्ययनाध्यापनानन्तरं गार्हस्थ्यं सम्पाद्य स्वज्येष्ठसुताय अधीतशब्दवेदान्तज्यौतिषशास्त्राय देवदत्तनामकाय समर्प्य सम्पत्तिजातम् परमत्यागमाजग्मुः। मान्याश्चामी देवदत्तशुक्लाः यावज्जीवं निर्जीविकमध्यापनञ्चक्रुः। तेषाम् पुत्राः परमादरणीयचरणाः शब्दतर्कशुद्धाद्वैतादिकृतविशिष्टश्रमाः परममतयोऽनेकग्रन्थकृतःसाधीयांसः कीर्त्तिवर्णशुक्लाः गायत्र्यादिमहानुष्ठानेन तीर्थयात्रादिना साङ्गोपाङ्गं चातुराश्रम्यम्पालयाञ्चक्रुः। तदीयकनिष्ठपुत्रा घटिकाशतकशतावधानाशुकविवैयाकरणशिरोमण्याद्यनेकपदवीभृतः श्रीवेणीमाधवशास्त्रिणोऽस्मज्जनकाःशैशवे स्वमण्डलान्तर्वर्त्तिधौलीग्रामस्थेभ्यो वैयाकरणकेसरिश्रीदुर्गादत्तशास्त्रिमहोदयेभ्योऽधीत्य कौमुदीशेखरमनोरमान्यायसिद्धान्तमुक्तावल्यादिग्रन्थान् काशीमागत्य विश्वप्रसिद्धेभ्यो महामहोपाध्यायश्रीजयदेवमिश्रशास्त्रिचरणेभ्योऽधीत्य सपरिष्कृति शब्दतर्कवेदान्तादिशास्त्रं द्वादशवर्षाध्यापनानन्तरं ग्रन्थनिर्माणे प्रवृत्ताः १ हिंसाखण्डनकौमुदी २ कौमुदीकल्पलतिका ३ वैयाकरणभूषणसार ( टीका ) ४ शक्तिवाद (टीका) ५ व्युत्पत्तिवाद (शास्त्रार्थकला टीका) ६ परिष्कारदर्पणादिग्रन्थरत्नान्यरचयन्। तच्चरणानुरागाल्लब्धसाधारणशब्दव्युत्पत्तिना तदीयमध्यमपुत्रेण मया कौमुदीकल्पलतिकादिद्वयमपि ग्रन्थो यथामति टिप्पणीभिः परिष्कृत्य संशोध्य च भवतां सेवासु निवेद्यते आशास्यते चाकिञ्चित्करोऽपि किञ्चित्करोऽयम् भवतामनुरागाद् भविष्यतीति।

मार्ग० शु० सप्तमी
सँ० १९९२ वैक्रमे

प्रार्थयते—विद्वज्जनचरणसेवकः—

**श्री राजनारायण शुक्लः**
काशीस्थ गोयनका सं० महाविद्यालयीयः

# राजकीयपरीक्षाप्रश्नपत्राणि

## न०्य०्या० आ० ३ वर्षे द्वितीयपत्रम्

### सन् १९३४ ई०

१—सम्पन्नो व्रीहिरित्यत्रैकवचनोपस्थितानां नानैकत्वानां प्रत्येकं नाना व्रीहिष्वन्वयाङ्गीकारे दोषम्प्रदर्श्यैकवचनार्थत्वं परिष्क्रियताम्। १०

२—घटो घट इत्यत्रान्वयबोध आक्षिप्य परिह्रियताम्। १०

३—धात्वर्थविषये प्राचीननवीनमते पृथगुपपाद्य पौरवं गां याचते विप्र इत्यत्रावयवार्थप्रदर्शनपूर्वकं शाब्दबोधाकारः प्रदर्श्यताम् १०

---

### सन् १९३६ ई०

१—शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गस्संसर्गमर्यादया भासते इत्येतद्वाक्यजन्यबोधप्रकारं निरूप्यैतद्वाक्यबोधितनियमाकारः परिष्कृत्य प्रदर्शनीयः १०

२—संख्याया विभक्त्यर्थत्वं परमतनिराकरणपुरस्सरमुपपाद्य प्रकृतेः संख्याविशिष्टवाचकत्वे गदाधरदर्शिता युक्तीरुपपादयत १०

३—चाक्षुषत्वाद्यवच्छिन्नवाचकदृश्यादिधातुसमभिव्याहृतद्वितीयाया लौकिकविषयित्वार्थकत्वे पुष्पं जिघ्रतीति प्रयोगानुपपत्तिः कथम् प्रदर्शिता ग्रन्थकृता कश्च तत्र परिहारः कृत इति समुपपादनीयम् १०

---

## न०्य०न्या० आ० ३ वर्षे द्वितीयपत्रम्

### सन् १९३४ ई०

१—शाब्दबोधे चेत्यत्र एकत्वस्य पदे पदार्थे पदार्थतावच्छेदके पदार्थगतरूपे वाऽन्वय इति प्रदर्शनपुरस्सरमाकाङ्क्षाभास्यत्वनियामकमनुगतरूपं सम्यग् विविच्य नञ्द्वयघटितवाक्यस्थले स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धस्य आकाङ्क्षाभास्यत्वमुपपाद्यताम् १०

२—तद्धर्मावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदस्य हेतुतास्वीकारेऽपि नीलघटो नीलोघट इत्यत्र नीलत्वघटत्वोभयभेदस्य केवलान्वयित्वेन नीलत्वघटत्वोभयस्मिन्नपि सत्त्वात् कथन्नाभेदान्वयबोधः १०

३—गान्दोग्धि पयः पौरवं गां याचते विप्रः पुष्पं जिघ्रति घट आकाशं न पश्यति इत्यादौ प्रकृतिप्रत्ययधात्वर्थनिर्देशपूर्वकं शाब्दबोधाकारं प्रदर्श्य कार्तिकमारभ्य चैत्रं यावच्छीतं भवति इत्यत्र यावच्छब्दार्थो निरूपणीयः १०

---

सन् १९३९ ई०

१—तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानम्प्रति तद्धर्मभेदत्वेन हेतुत्वे लाघवम्प्रदर्शितं भट्टाचार्यैः। अत्र पूर्वकल्पापेक्षया द्वितीयकल्पे लाघवं समुपपाद्य घटो घट इत्यादौ धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधापत्तिश्च वारणीया १०

२—भवन्मतेऽपि स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान् पुरुष इत्यादिनिश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया तादृशवाक्यजन्यशाब्दधीविरोधितया तादृशनिश्चयाभावस्य तथाविधसामग्रीप्रतिबन्धकतायां निवेशाधिक्येन लाघवानवकाशादिति गादाधरी। अत्रेदं जिज्ञास्यते-प्रकारतावादिनामपि राजस्वत्वाभावव्याप्यस्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववान् पुरुष इति निर्णयस्य स्वातन्त्र्येण प्रतिबन्धकतया तदभावस्य निवेशनीयतया तदंशे साम्यमेवेति लाघवानवकाशादिति कथं सम्भवदुक्तिकमिति विविच्योपपाद्यताम् १०

३—धातूनां विशिष्टे केवलव्यापारे वा शक्तिरित्यत्र साधकबाधकयुक्तिप्रदर्शनपूर्वकं न्यायसिद्धान्तं सम्यग् विविच्य वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाभ्युपगमे युक्तिः प्रदर्शनीया १०

अथवा

गुरुं धर्मम्पृच्छति, रजकाय वस्त्रं ददाति, शिष्यं शास्त्रं ज्ञापयति, रङ्गं रजतं जानाति, पाकं चिकीर्षतीत्यादौ प्रकृतिप्रत्ययधात्वर्थनिर्वचनपुरस्सरं शाब्दबोधस्वरूपमुपपाद्य परसमवेतत्वस्य द्वितीयार्थत्वे ग्रन्थकर्तुरभिप्रायो वर्णनीयः १०

---